॥ श्रीविष्णुपदी अथवा गङ्गास्तोत्रम् ब्रह्मवैवर्तपुराणान्तर्गतम् ॥
ॐ नमो गङ्गायै ।
श्रीब्रह्मोवाच ।
श्रोतुमिच्छामि देवेश लक्ष्मीकान्त नमः प्रभो ।
विष्णो विष्णुपदीस्तोत्रं पापघ्नं पुण्यकारणम् ॥ ११३॥

श्री नारायण उवाच ।
शिवसङ्गीतसंमुग्धश्रीकृष्णाङ्गद्रवोद्भवाम् ।
राधाङ्गद्रवसम्भूतां तां गङ्गां प्रणमाम्यहम् ॥ ११४॥

या जन्मसृष्टेरादौ च गोलोके रासमण्डले ।
संनिधाने शंकरस्य तां गङ्गां प्रणमाम्यहम् ॥ ११५॥

गोपैर्गोपीभिराकीर्णे शुभे राधामहोत्सवे ।
कार्तिकीपूर्णिमाजातां तां गङ्गां प्रणमाम्यहम् ॥ ११६॥

कोटियोजनविस्तीर्णा दैर्घ्ये लक्षगुणा ततः ।
समावृता या गोलोकं तां गङ्गां प्रणमाम्यहम् ॥ ११७॥

षष्टिलक्षैर्योजनैर्या ततो दैर्घ्ये चतुर्गुणा ।
समावृता या वैकुण्ठं तां गङ्गां प्रणमाम्यहम् ॥ ११८॥

विंशल्लक्षैर्योजनैर्या ततो दैर्घ्ये चतुर्गुणा ।
समावृता ब्रह्मलोकं या तां गङ्गां प्रणमाम्यहम् ॥ ११९॥

त्रिंशल्लक्षैर्योजनैर्या दैर्घ्ये पञ्चगुणा ततः ।
आवृता शिवलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १२०॥

षड्योजनसुविस्तीर्णा दैर्घ्ये वशगुणा ततः ।
मन्दाकिनी येन्द्रलोके तां गङ्गां प्रणमाम्यहम् ॥ १२१॥

लक्षयोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः ।
आवृता ध्रुवलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १२२॥

लक्षयोजनविस्तीर्णा दैर्घ्ये षड्गुणिता ततः ।
आवृता चन्द्रलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १२३॥

योजनैः षष्टिसाहस्रैर्दैर्घ्ये दशगुणा ततः ।

आवृता सूर्यलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १२४॥

लक्षयोजनविस्तीर्णा दैर्घ्ये षड्गुणिता ततः ।
आवृता सत्यलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १२५॥

दशलक्षैर्योजनैर्या दैर्घ्ये पञ्चगुणा ततः ।
आवृता या तपोलोकं तां गङ्गां प्रणमाम्यहम् ॥ १२६॥

सहस्रयोजना या च दैर्घ्ये सप्तगुणा ततः ।
आवृता जनलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १२७॥

सहस्रयोजनयामा दैर्घ्ये सप्तगुणा ततः ।
आवृता या च कैलासं तां गङ्गां प्रणमाम्यहम् ॥ १२८॥

पाताले या भोगवती विस्तीर्णा दशयोजना ।
ततो दशगुणा दैर्घ्ये तां गङ्गां प्रणमाम्यहम् ॥ १२९॥

क्रोशैकमात्रविस्तीर्णा ततः क्षीणा न कुत्रचित् ।
क्षितौ चालकनन्दा या तां गङ्गां प्रणमाम्यहम् ॥ १३०॥

सत्ये य क्षीरवर्णा च त्रेतायामिन्दुसंनिभा ।
द्वापरे चन्दनाभा च तां गङ्गां प्रणमाम्यहम् ॥ १३१॥

जलप्रभा कलौ या च नान्यत्र पृथिवीतले ।
स्वर्गे च नित्यं क्षीराभा तां गङ्गां प्रणमाम्यहम् ॥ १३२॥

यस्याः प्रभाव अतुलः पुराणे च श्रुतौ श्रुतः ।
या पुण्यदा पापहर्त्री तां गङ्गां प्रणमाम्यहम् ॥ १३३॥

यत्तोयकणिकास्पर्शः पापिनां च पितामह ।
ब्रह्महत्यादिकं पापं कोटिजन्मार्जितं दहेत् ॥ १३४॥

इत्येवं कथितं ब्रह्मन्गङ्गापद्यैकविंशतिम् ।
स्तोत्ररूपं च परमं पापघ्नं पुण्यबीजकम् ॥ १३५॥

नित्यं यो हि पठेद्भक्त्या सम्पूज्य च सुरेश्वरीम् ।
अश्वमेधफलं नित्यं लभते नात्र संशयः ॥ १३६॥

अपुत्रो लभते पुत्रं भार्याहीनो लभेत्प्रियाम् ।
रोगान्मुच्येत रोगी च बद्धो मुच्येत बन्धनात् ॥ १३७॥

अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ।
यः पठेत्प्रातरुत्थाय गङ्गास्तोत्रमिदं शुभम् ॥ १३८॥

शुभं भवेत्तु दुस्स्वप्नं गङ्गास्नानफलं भवेत् ॥ १३९॥

इति श्रीब्रह्मवैवर्ते महापुराणे प्रकृतिखण्डे नारदनारायणसंवादे
गङ्गोपाख्याने दशमोऽध्यायान्तर्गतं गङ्गास्तोत्रं सम्पूर्णम् ॥